दत्तम् । भूपेन वनपालस्यास्य वृक्षं कृत्वा यदा पक्वफलमानयसि तदा तुष्टिर्दीयते इति समर्पितम् । तेन उप्तम् । तद्वृक्षे फलमायाते एकदा गृध्रे सर्पं गृहीत्वा खे गच्छति सति विषबिन्दुः फलस्योपरि पतितः । तदूष्मणा पक्वं फलं वनपालेनानीय राज्ञे समर्पितम् । तेन च युवराजाय दत्तम् । तद्भक्षणान्मृतः । राज्ञा कोपात् स वृक्षः सत्फलः छेदितः । अत्र सर्वे विचारका एव । प्रतिपादय । एवंविधो ऽस्ति । नास्ति को ऽपि । कथय ।

अयोध्यायां वणिग्धनदत्तस्य पुत्री देवदत्ता वसुदेवाय दत्ता । पाणिग्रहणार्थं वेदिकायाम् उभयोर्मध्ये ऽन्तःपटो धृतः । तदवसरे राजहस्ती बन्धनानि त्रोटयित्वा निर्गतः तद्भयान्नश्यतो वसुदत्तस्य पाणिर्देवदत्ताया लग्नः । तत्स्पर्शमात्रेण तस्याः गर्भः स्थितः । नवमे मासे बहवो भौतिका धनदत्तेन गृहमानीताः । देवदत्तया कस्मात् किमर्थमागता इति संभाषणे कृते दक्षिणापथादागताः, द्वादशवर्षदुर्भिक्षभयादिति कथितम् । मया गर्भस्थेन श्रुत्वा चिन्तितम् । बहिर्दुर्भिक्षकालः प्रवर्तते । अतो ऽत्रैव तिष्ठामीति स्थितो ऽहम् । तत्र द्वादश वर्षेषु गतेषु पुनस्तैरागत्य दुर्भिक्षो गतः, स्वदेशं गम्यते इति प्रतिपादितम् । श्रुत्वाहं मम मातुर्मुखान्निर्गतः । तदा मन्माता चुल्लीसमीपे स्थितेति अहं तत्र पतितः । उत्थाय मया मन्मातुश्चोरं धृत्वा भोजने याचिते सा राक्षसो ऽयमिति भणित्वा पलायिता । सर्वैर्विचार्य निर्धारितो ऽहं जटाधरो जातः । एकदायोध्यायां गत्वा मातृपित्रोर्विवाहं दृष्टवान् विहरन्नत्र समायातः । इति तपश्चरणकारणं भणितं श्रुत्वा तैरुक्तम् । अहो विस्मयकारि तपस्विनो वचनम् । तद्यथा—पुरुषबाहुस्पर्शनमात्रेण गर्भसंभूतिः । गर्भे स्थित्वा श्रवणम् । द्वादश वर्षाणि तत्र स्थितिः । मुखान्निर्गमनम् । उत्पन्नसमय एव भोजनं याचितम् । त्वयि पुत्रे तव मातुः कन्यात्वं च विरुद्धम् । न विरुद्धं भवन्मते ऽपि सद्भावात् । अस्मन्मते किमेवं विद्यते, किं न विद्यते । यद्यस्ति तर्हि कथय । कथ्यते—

अयोध्यायां तृतीयारथ्याख्ये क्षत्रियपुत्र्यौ कृतचतुर्थस्नाने एकस्मिन् शयनतले सुप्ते । परस्परस्पर्शनेन एकस्या गर्भे भगीरथ उत्पन्नः इति । तथा सौरीपुरेशान्धकवृष्णिः । तस्य भ्रातुर्नरवृष्णेः पुत्री गान्धारी । हस्तिनागपुरेशव्यासपुत्रजात्यन्धकधृतराष्ट्राय दास्यामीति पित्रा प्रतिपन्नम् । तया एकदा चतुर्थस्नानं कृत्वा धृतराष्ट्रो ऽयमिति पनसवृक्ष आलिङ्गितः । ततो गर्भसंभूतौ नवमासावसाने पनसफलं निर्गतम् । तत्र दुर्योधनादि पुत्रशतं स्थितमिति विद्यते नो वा । भवतु । कथं गर्भस्य श्रवणमिति । किं भवन्मते प्रसिद्धं न विद्यते । किमेवं विद्यते । कथ्यते ।

द्वारवत्यां विष्णोर्भगिनी सुभद्रा पाण्डुपुत्रायार्जुनाय दत्ता । गर्भसंभूतौ प्रसूत्यर्थं स्वभ्रातुर्गृहमागता । तस्या रात्रौ नारायणः कथां कथयति । चक्रव्यूहकथने क्रियमाणे निद्रिता सा । प्रतिध्वन्यभावे तूष्णीं स्थिते वासुदेवे गर्भस्थेन भणिते वासुदेवेन ध्यातम् । अहो कश्चिदसुरो भविष्यति । तत उत्पन्नो ऽभिमन्युः । किं सत्यमसत्यं वा । नासत्यम् । तर्हि तस्य श्रवणमुचितं न ममेति को ऽयं पक्षपातः । भवतु श्रवणं, कथं द्वादशवर्षाणि गर्भस्थितिः । किं युष्मन्मते नास्ति । नास्ति । यद्यस्ति तर्हि कथय । कथ्यते । एकस्मिन्नरण्ये मदस्तपः करोति । एकस्यां रात्रौ इन्द्रियक्षरणे जाते सरसि कौपीनं प्रक्षाल्य कमल-कर्णिकायां निश्च्योतितम् । तत्र स्थितमिन्द्रियरजः मण्डूक्या गिलितम् । तदनु गर्भो जातः । प्रसूता पुत्री । अहो मज्जातौ किं मानुषी देवी वेयं जाता । तत्कर्णिकायाम् उपवेश्य सर्वा अवलोकयन्त्यः स्थिताः । मयेन संध्यावन्दनार्थमागतेन दृष्ट्वा मत्पुत्रीयमिति ज्ञात्वा स्वावासं नीता । मन्दोदरीसंज्ञापोषिता वृद्धिं गता । एकस्मिन् दिने सा तत्र कौपीनं गृहीत्वा स्नातुं गता । तत्र लग्नमिन्द्रियमार्द्रीभूय तत्प्रजनेन प्रविष्टम् । तदनु गर्भः स्थितः । ऋषिरुदरवृद्धि

दृष्ट्वा विस्मितः। ज्ञानेन ज्ञात्वा यावत्ते पतिर्भवति तावद् गर्भः स्थिरो भवत्विति स्तम्भितः। ततः सप्तशतवर्षेषु गतेषु लंकायां रावण उत्पन्नो राज्ये स्थितः। एकदा पार्पाधि गतः। मन्दोदरीं दृष्ट्वासक्तो जातः। अनुयाचिता ऋषिणा दत्ता। तां परिणीय स्वपुरं गतः। तस्याः पुत्र इन्द्रजिज्जातः। एतद्भवति नो वा। भवत्येव।

एवं तर्हि तस्या गर्भे सप्तशतवर्षाणि स्थातुमुचितम्। न ममेति को ऽयं नियमः। भवतु तत्र स्थितिः। कथं मुखनिर्गमनम्। कथं कर्णस्य कर्णनिर्गमनम्। भवतु मुखनिर्गमनम्। कथं तदैव भोजनयाचनम्। किं भवद्भिः स्वमतं न ज्ञातम्। त्वया ज्ञातं चेत् ब्रूहि। प्रोच्यते।

पाराशरो नाम प्रसिद्ध ऋषिः गङ्गायाः परतीरगमनार्थं तारकमपश्यन् तत्पुत्रीं योजनगन्धां दृष्ट्वा मामुत्तारयेत्युक्तवान्। तयोक्तम्। त्वं देवर्षिः। अहं निकृष्टा। उभयोः कथं सह यानम्। तयोक्तम्। तेनोक्तम्। न दोषः इति। नावं चटयित्वा याने नदीमध्ये आसक्तचित्तेनोक्तम्। मामिच्छ। नोचितम्। तेनोक्तम्। भणितं कुरु। तव शरीरे सौगन्ध्यं करोमीति। कृते तस्मिन् पुनस्तयोक्तम्। जनाः पश्यन्ति। तेन नीहारः कृतः। पुनस्तयोक्तम्। नौर्न तिष्ठति। कथं सौख्यम्। तेन द्वीपाः कृताः। एकस्मिन् द्वीपे तया सह क्रीडितवान्। एवंविधस्य कथमेतज्जातम्। संगात्। तथा चोक्तम्।

ब्रह्मचर्यविशुद्ध्यर्थं त्यागः स्त्रीणां न केवलम्।
त्याज्यः पुंसामपि प्रायो विटविद्यावलम्बिनाम्॥इति।

तपोऽग्निना दग्धकामेन्धनस्य कथमेतत्संभाव्यते। स्त्रीमुखावलोकनात्। तथा चोक्तम्।

क्षीणस्तपोभिः क्षपितः प्रवासैर्विध्यापितश्चारु समाधितो यैः।
तथापि चित्रं ज्वलति स्मराग्निः कान्ताजनापाङ्गविलोकनेन॥इति।

क्रीडावसाने परतीरं गतः तदैव तस्या गर्भसंभूतौ सत्यां जटाजूटधरो लाकुटकौपीनसमन्वितो व्यास उत्पन्नः। तदैव तेनोक्तम्। मया कथं क्व तपः क्रियते। इति पृष्टे पाराशरेणोक्तम्। त्वयात्रैव तपः कर्तव्यमिति प्रतिपाद्य गतः। एतत् किं परमार्थभूतं नो वा। नेति केन भण्यते। तर्हि तदैव व्यासस्य तपःशिक्षां प्रष्टुमुचितम्। न मम भोजनयाचनमिति कथं प्रतिपाद्यते। भवतु तद्याचनम्। त्वयि पुत्रे जाते तव माता कथं कुमारी। किं न ज्ञायते भवद्भिः। न ज्ञायते। यदि त्वया ज्ञायते तर्हि कथय। कथ्यते।

कौन्त्याः सूर्येण गर्भो जातः। तदनु कर्णः पुत्रो जातः। तथापि सा कन्या। तथापरापि कथा।

उद्दालको नामर्षिः। स चैकदा गङ्गायां कृतस्नानः अनुकौपीनं प्रक्षाल्य कमलकर्णिकायां निपीडितवान्। तत्कमल-मयोध्याधिपरघुपतिसुता चन्द्रमती तत्र स्नातुं गता। तया समीचीनं दृष्ट्वाघ्रातम्। तदनु सा गृहमागता गर्भचिह्ने जाते मातापितृभ्यां पृष्टा। पुत्रि, कस्यायं गर्भः। तयोक्तम्। मया न ज्ञायते। नवमासावसाने तृणबिन्दुनामानं पुत्रं प्रसूता। स च जारपुत्र इति जनैर्भण्यते। सापि केनापि परिणीयते। एकदा भिक्षार्थमागतेनोद्दालकेन तृणबिन्दुं दृष्ट्वायं मम पुत्र इति ज्ञातम्। सा च राजसमीपे याचित्वा परिणीता। एतत् किं विद्यते नो वा। एवं तर्हि ताभ्यां पुत्रमातृभ्यां कन्यात्वं घटते। न मम मातुरिति कथं विचार्यते। इति हेतुनयदृष्टान्तैरनेकधा जित्वोद्यानं गतौ।

तदनु पवनवेगेन भणितम् । हे मित्र, यदि कर्णः कर्णेन निर्गतश्च न भवति, तर्हि तस्योत्पत्तिं ब्रूहि । मनोवेगः प्राह ।

अत्रैवार्यखण्डे कुरुजाङ्गलदेशे हस्तिनागपुरेशो विचित्रः । तस्य तिस्रो देव्यः, अम्बा, अम्बाला, अम्बिका चेति । तासां क्रमेण पुत्रा धृतराष्ट्रपाण्डुविदुराः । सूर्यपुराधिपान्धकवृष्णिभ्राता नरवृष्णिः । तत्पुत्री गान्धारी जात्यन्धकधृतराष्ट्राय दत्ता । अन्धकवृष्णिना भणितम् । मम पुत्र्यौ कौन्तीमाद्रयौ पाण्डवे दास्यामीति । तच्छ्रुत्वा पाण्डुर्हृष्टः । पाण्डोः पाण्डुरोगपीडां श्रुत्वा राज्ञा मत्पुत्र्यौ अन्यस्मै दास्यामीत्युक्तम् । तच्छ्रुत्वा पाण्डुर्दुःखितः चिन्ताग्निना संतप्तगात्रः एकदोद्यानं गतः । तत्र लतागृहनिकटे मुद्रिका दृष्टा गृहीता च । तदवसरे व्याकुलीकृतान्तरङ्गश्चिन्तागतिर्नामा विद्याधरः समायातः । इतस्ततोऽवलोकितवांश्च । पाण्डुना दृष्ट्वोक्तम् । किं भवदीयेयं मुद्रिका । दृष्ट्वा तेनोक्तम् । भवत्येव । दत्ता । तेन खगेनोक्तम् । त्वत्प्रसादाज्जीवितोऽहम् । त्वं किमिति कृशः । कथिते वृत्तान्ते वियच्चरेणोक्तम् । इयं काममुद्रिकाभीष्टं रूपं प्रयच्छति । एतन्माहात्म्यादभिलषितसुखानुभवनं कुरु । पश्चान्मया गृह्यते इति दत्ता तेन । पाण्डुस्तां गृहीत्वा सूर्यपुरीं गतः । कुन्त्या जलक्रीडावसरे तदुद्यानं प्रविष्टः । काममुद्रिकाप्रभावेण विशिष्टं रूपमात्मीयं तस्या दर्शितम् । तेन सा चासक्ता बभूव । स च स्त्रीरूपेण तद्गृहं प्रविष्टः । अष्टादशदिनानि तया सह स्थित्वा स्वपुरं गतः । इतस्तस्या गर्भे जाते मातापितृभ्यां पृष्टा । तया सर्वं कथितम् । गूढगर्भेण पुत्रं प्रसूता । स च मञ्जूषायां निक्षिप्य स्ववंशावल्या सह यमुनायां प्रवाहितः । अङ्गदेशे चम्पापुरेशसूर्येण तं दृष्ट्वा स्वदेव्या राधायाः समर्पितः । स च मञ्जूषायां कर्णौ धृत्वा स्थित इति कर्णनाम्ना वृद्धिं गतः । इति निरूपिते हृष्टः पवनवेगः ।

ततोऽन्यस्मिन् दिने बौद्धवेषेण गत्वा दक्षिणपूर्वस्यां दिशि स्थितगोपुरे तत्क्रमेणोपविष्टौ । तथैव संभाषणे कृते विप्रैः को गुरुः, किं तपश्चरणकारणमिति पृष्टे, नावयोर्गुरुर्विद्यते । गुरुं विना कथं तपः । कथयितुं नायाति । किमिति । क्षीरकथाकरणभयात् । सा कीदृशा ।

सागरदत्तो नाम वणिक् नालिकेरद्वीपं व्यवहारार्थं गतः । सह नीताया गोर्दधि तदधीशतोमराय दत्तम् । तेन चोक्तम् । किमर्थमिदम् । वणिजोक्तम् । भोजनार्थम् । भुक्ते तस्मिन् तोमरेणोक्तम् । कस्मादिदं रसायनमानीतं त्वया । वणिजोक्तम् । मम कुलदेवतया दीयते । सा मह्यं दातव्या । वणिजोक्तम् । न । पुनस्तोमरेणोक्तम् । यत्त्वया प्रार्थ्यते तन्मया दीयते इति । महताग्रहेण याचिता गौर्यावदिष्टं तावद् द्रव्यं गृहीत्वा दत्ता । तेन स्थापिता स्वगृहे । भोजनवेलायां तस्या भाण्डं प्रदर्श्य याचितं रसायनम् । सा मौनेन स्थिता । एवं द्वितीयदिने तृतीयेऽपि याचिते अदाने सति तद्गुणमजानता संकुप्य निःसारिता । एवमेव तु यो यद्गुणं न जानाति स तेन किं करिष्यति । तदुक्तम् ।

गुणा गुणज्ञेषु गुणीभवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः ।
सुस्वादु तोयं भवतीह नद्याः समुद्रमासाद्य भवन्त्यपेयम् ॥

एवंविधः कोऽपि न विद्यते । कथय । अगुरुकथाकरणे बिभेमि । सा किंलक्षणा । मगधदेशे राजगृहे राजा गजरथः । तत्रैकः कुटुम्बी हरिमेघहरः । तदपत्यं हलिः । मृते पितरि हलिना धावनेऽभ्यासः कृतः । जिताभ्यासो भूत्वा सिंहद्वारे राजसेवां करोति । एकदा राजा बाह्यालयर्थं गतः दुष्टाश्वेन वनं नीतः । स्थिते परिजने हलिः सहगतः । राज्ञा दृष्ट्वा पृष्टः । कस्त्वमिति । तेनोक्तम् ।

तव भृत्यो ऽहम्। तदनु शुश्रूषां कुर्वन् स्थितः। अश्वमार्गेणागते परिजने राजा विभूत्या पुरं प्रविष्टः। तदनु हलियोग्यम् उक्तं राज्ञा। रे पञ्चशतग्रामान् गृहाण। तेनोक्तम्। मातरं पृष्ट्वा गृह्यते। तदनु पृष्टया मात्रा गदितम्। हे पुत्र, त्वमहं चोभौ। एवं गृहीतेषु ग्रामेषु चिन्तां कः करिष्यति। यदि राजा तुष्टस्तर्हि सुभूमिक्षेत्रमेकं गृहाण। एवं करोमीति राजसमीपं गत्वा याचिते क्षेत्रे राज्ञोक्तम्। हे अकृतपुण्य, ग्रामान् गृहाण। तेनोक्तम् परिचिन्ताकारकाभावात् न गृह्यन्ते। सति द्रव्ये सर्वं भविष्यति। गृहाण। न। सर्वैर्भणितम्। पुण्यहीनस्य संतुष्टो राजा किं करोति। तथा चोक्तम्।

न हि भवति यन्न भाव्यं भवति च भाव्यं विनापि यत्नेन।
करतलगतमपि नश्यति यस्य च भवितव्यता नास्ति॥ इति।

तथापि राज्ञा करुणया तस्या अगुरुचन्दनं दत्तम्। तेन चिन्तितम्। अहो, यो राजा सुक्षेत्रं दातुमसमर्थः स किं पञ्चशतग्रामान् दास्यति इति। तेन तद्वनं सर्वं छेदयित्वा संशोष्य प्रज्वालितम्। कियत्सु दिनेषु राज्ञा तद्वनं किं कृतमिति पृष्टः। तेनोक्तम्। छेदयित्वा दग्धमिति। पुनरुक्तं राज्ञा। तत्र किंचिदुद्वृत्तं विद्यते नो वा। तेनाभाणि। अर्धदग्धानि काष्ठानि सन्तीति। राज्ञोक्तम्। एकमानय। आनीतम्। इदानीं त्वापणे विक्रीणीथाः। तथा कृते बहु द्रव्यं दृष्ट्वा कृतः पश्चात्ताप इति। न तथा को ऽपि। मा भैषीः। कथय।

विक्रमपुरे वणिक्पुत्रावावाम्। आवयोः पिता बौद्धभक्तः। आवां बौद्धनिकटे पठावः। एकस्मिन् दिने अकालवृष्टिर्जाता। गुरोः संस्तरस्योपरि उदकस्रवणे जाते तच्छोषणार्थं समीपस्थ-पर्वतस्योपरि गतौ। शोषणसमये द्वाभ्यां सृगालाभ्यां पर्वतमुत्सार्यान्यत्र द्वादशयोजने नीत्वा स्थापितः सः। गतयोस्तयोरावां तदुपकरणानि गृहीत्वा बौद्धवेषेण भ्रमन्तावत्रागतौ इति तपोनुष्ठानकारणं भणितम्। अहो वैचित्र्यं रक्ताम्बरवचसः कथम्। अल्पसत्त्वाभ्यां किं पर्वतमुत्सार्य द्वादशयोजनेषु निक्षिप्यते। किं भवत्पुराणे प्रसिद्धमिदं न भवति। यदि भवति, कथय। कथ्यते।

रामायणे सीताहरणे जाते शुद्धौ च सत्यां लङ्कागमनोपायः क इति सचिन्तो रामः। मर्कटैर्भणितः। मा चिन्तां कुरु। सर्वमस्माभिः क्रियत इति। पर्वतानुत्सार्यानीय तैः सेतुर्बद्ध इति। उक्तं च।

एते ते मम बाहवः सुरपतेर्दोर्दण्डकण्डूपहाः
सो ऽयं सर्वजगत्पराभवकरो लङ्केश्वरो रावणः।
सेतुं बद्धमिमं शृणोमि कपिभिः पश्यामि लङ्कां वृतां
जीवद्भिस्तु न दृश्यते किमथवा किं वा न वा श्रूयते॥

इति सत्यं विद्यते नो वा। न विद्यते इति केन भण्यते। यद्येवं तर्हि वानराणां भूधरोद्धरण-मुचितं न शृगालयोरिति कथं श्लाघ्यम्। इति बहुधा जित्वोद्यानं गतौ। पवनवेगेन पृष्टो मनोवेगः। कथं रामलक्ष्मीधरयोर्लङ्कागमनमिति। स आह। हे मित्र, अस्मिन् भरते उत्सर्पिण्यवसर्पिण्यौ समे प्रवर्तेते। तयोः प्रत्येकं षट्कालाः प्रवर्तन्ते। तत्रेयमवसर्पिणी। अस्यां षट्कालाः सन्ति। ते च के। सुषमः, सुषमसुषमः सुषमदुष्षमः, दुष्षमसुषमः, दुःष्षमः, अतिदुष्षमश्चेति। तत्र चतुर्थकाले त्रिषष्टिशलाकापुरुषाः स्युः। ते च के। चतुर्विंशतितीर्थंकराः। किंनामानः। वृषभः, अजितः, संभवः,

अभिनन्दनः, सुमतिः, पद्मप्रभः, सुपार्श्वः, चन्द्रप्रभः, पुष्पदन्तः, शीतलः, श्रेयान्, वासुपूज्यः, विमलः, अनन्तः, धर्मः, शान्तिः, कुन्थुः, अरः, मल्लिः, मुनिसुव्रतः, नमिः, नेमिः, पार्श्वः, वर्धमानश्चेति। एते सर्वे मुक्तिगामिनः। द्वादश चक्रवर्तिनः। ते च के। भरतः, सगरः, मघवा, सनत्कुमारः, शान्तिः, कुन्थुः, अरः, सुभौमः, पद्मः, हरिषेणः, जयसेनः, ब्रह्मदत्तश्चेति। एषां मध्ये अष्टौ मुक्ति गताः। ब्रह्मदत्तसुभौमौ सप्तमनरकं गतौ। मघवासनत्कुमारौ स्वर्गं गतौ। नव बलदेवाः। विजयः, अचलः, सुधर्मः, सुप्रभः, सुदर्शनः, नन्दी, नन्दिमित्रः, रामः, पद्मश्चेति। अष्टौ मुक्तिगामिनः। पद्मः ब्रह्मस्वर्गं गतः। नव वासुदेवाः। त्रिपिष्टः, द्विपिष्टः, स्वयंभूः, पुरुषोत्तमः, पुरुषसिंहः, पुण्डरीकः, दत्तः, नारायणः, कृष्णश्च। तेषां मध्ये एकः सप्तमं नरकं, पञ्च षष्ठं नरकं गताः। एकः पञ्चमनरकं गतः। एकश्चतुर्थम् अपरस्तृतीयम्। एते कथमाराध्याः। नव प्रतिवासुदेवाः। अश्वग्रीवस्तारकः, मेरकौ, मधुकैटभः, निशुम्भः, बलिः, प्रहरणः, रावणः, जरासन्धश्चेति। एते स्वकालवासुदेवाः यत्र नरके गताः इति त्रिषष्टिशलाकाः पुरुषाः। एकादश रुद्रा भवन्ति। के ते। भीमः, बलिः, जितशत्रुः, रुद्रः, वैश्वानरः, सुप्रतिष्ठः, अजितारिः, पुण्डरीकः, अजितधरः, अजितनाभिः, प्रतालः, सात्यकिः, पुत्रश्चेति। एते निर्ग्रन्थलिङ्गधारिणः। दशमपूर्वाध्ययने भग्ना भवन्ति। एतेषां मध्ये द्वौ सप्तमनरकं गतौ। पञ्च षष्ठं, एकः पञ्चमं, द्वौ चतुर्थम् अपरः तृतीयं गतः। इति कथमेते वन्द्याः। तत्राजितनाथकाले भरतक्षेत्रविजयार्धपर्वतदक्षिणश्रेणौ रथनूपुरचक्रवालपुराधीश[illegible] पुत्रस्तोयदवाहनः। तस्मै पूर्वभवस्नेहेन भीमराक्षसनामव्यन्तरदेवेन लङ्काद्वीपमध्ये स्थितं लङ्कापुरं, राक्षसी विद्या, नवमुखकण्ठाभरणं च दत्तम्। ततस्तस्य तोयदवाहनस्य कुलं राक्षसकुलं जातम्। तत्संताने बहु गतेषु उत्पन्नो धवलकीर्तिः। तेन विजयार्धपर्वतदक्षिणश्रेणिमेघपुराधीशात्तोदूयस्य पुत्रः श्रीकण्ठः। तनुजा देविला परिणीता। तेन च श्रीकण्ठाय वानरद्वीपो दत्तः वानरी विद्या च। ततस्तस्य श्रीकण्ठस्य श्रीकुलं वानरकुलं जातम्। रावणो राक्षसकुले उत्पन्न इति राक्षसो भण्यते। न निशाचरः। सुग्रीवादयस्तु वानरकुलोद्भवाः। न तु स्वयं वानराः। ते च आकाशगामिनीप्रभावेण लङ्कां गताः। न तु सेतुं बन्धयित्वेति। अन्यत् सर्वं पद्मचरित्रे ज्ञातव्यम्।

इति स्वसमयप्रसिद्धरामायणनिरूपणप्रवणैर्वचनैस्तद्वंशोत्पत्ति प्रतिपाद्य मित्रस्य चित्तं प्रह्लाद्य परस्मिन् दिने श्वेताम्बरवेषेण गत्वा ऐशान्यां दिशि गोपुरे द्वारेण तत्क्रमेणोपवेशने संभाषणे च जाते [illegible]। को गुरुः। किं तप[illegible]रणकारणम्। श्वेतपटेनोक्तम्—नावयोर्गुरुरस्ति। तद्विना कथं तपः। किं रजकचन्दनकथा न विधीयते। सा किंरूपा। स आह।

उज्जयिन्यां राजा शान्तनामा। तस्य महान् दाहज्वरो जातः। वैद्यप्रतिकारे उल्लंघिते राज्ञा यो मदीयं ज्वरमपहरति तस्मै अभीष्टं दीयते। आज्ञा दत्ता वणिजैकेन धृता। तदनु वणिक् शीतलद्रव्यावलोकनार्थं प्रदेशं गतः। तत्र वस्त्राणि प्रक्षालयता रजकेन नदीरयेणागतं गोशीर्षचन्दनकाष्ठमिन्धनार्थं[illegible] तटे निक्षिप्तम्। भ्रमता तेन वणिजा दृष्टम्। ज्ञात्वा तस्मै काष्ठभारमेकं दत्त्वा संगृह्य तत्सामर्थ्येन राज्ञो ज्वरमपसार्य राज्ञो ऽभीष्टं गृहीतमिति। किमीदृशः को ऽपि विद्यते। कथय। किं मूर्खचतुष्टयकथाकारको नरो न विद्यते। तत् कीदृशं मूर्खचतुष्टयम्। कथ्यते मया।

चतुर्भिः पुरुषैर्मार्गे गच्छद्भिः संमुखमागच्छन् मुनिर्दृष्टः। तदनु नमस्कारे कृते मुनिना वारमेकं धर्मवृद्धिरस्त्वित्युक्तम्। चतुर्भिरपि कियदन्तरं गत्वा चिन्तितम्। अहो, अस्माभिः सर्वैर्नमस्कारे कृते मुनिना एकैव धर्मवृद्धिर्दत्ता। सा कस्यात्र भवति। मम ममेति झगटके कृते सर्वैः

पर्यालोचितम् । मुनिः प्रष्टव्यः । तेन यस्मै दत्ता तस्मै भवत्विति । मुनिं पृष्टवन्तः कस्मै धर्मवृद्धिर्दत्तेति । मुनिनात्मनो रक्षणार्थं योऽतिमूर्खः तस्मै दत्तेति भणित्वा गतम् । ते ऽप्यहमहं मूर्ख इति वादेन नगरमागताः । तत्र सभां मेलयित्वा अस्माकं विवादः स्फेटनीय इति मुद्रापणे दत्ते सभास्थैः को विवाद इति पृष्टाः । कथिते स्वरूपे मध्यस्थैरुक्तम्—आत्मीयमात्मीयं मूर्खत्वं प्रतिपादयत । तत्रैकेनाभाणि ।

एकस्मिन् ग्रामे ऽहं ग्रामकूटकः । मम द्वे भार्ये स्तः । एकस्यां रात्रौ एकस्मिन् एव शयनतले भार्ययोर्मध्ये उत्तान उभयोरुपरि हस्तौ निधाय सुप्तः । तावदाखुना वर्ति गृहीत्वा गच्छता मम लोचनस्योपरि पातिता वर्तिः । तच्छिखया दह्यमाने ऽपि लोचने उभयोर्मध्ये कस्यांचिदुपरि स्थितं हस्तम् आकृष्यापसार्यते चेत् प्रेमभङ्गो भविष्यतीति मत्वा सहमानः स्थितः । दुर्गन्धात् ज्ञात्वा ताभ्यां स्फेटिता । तदनु स्फुटिते लोचने । सर्वैविषमलोचन इति नाम कृतम् । एतन्मे मूर्खत्वम् । परः प्राह । तन्मौर्ख्यं शृण्वन्तु ।

एकस्मिन् ग्रामे अहं मुख्यभूतपुरुषः । ममापि द्वे भार्ये । खरी रिंछो च । ताभ्यां यथाक्रमं मम दक्षिणवामपादयोर्नवनीतेन मर्दनं विधीयते । एकस्मिन् दिने खरी दक्षिणपादमर्दनं कृत्वा जलानयनार्थं गता प्रविष्टा । अनु रिंछया वामपादं दक्षिणस्योपरि निधाय गता । आगतया खर्या दृष्ट्वा मम पादस्योपरि स्वकीयं पादं निक्षिप्य निकृष्टा गतेति कोपात् मुसलेनाहत्य मोटितः पादः । तत्रागतया रिंछया द्वितीयोऽपि भग्नः । तदनु सर्वैः खञ्ज इति नाम कृतम् । तृतीयो ब्रूते । मम मूर्खत्वमवधारयन्तु ।

एकस्मिन् ग्रामे कूटकपुत्रो ऽहम् अपरस्मिन् ग्रामे ग्रामकूटपुत्री परिणीता मया । एकदा स्वग्रामात् श्वशुरग्रामं गच्छतो मे माता बुद्धिर्दत्तौ । कथं तत्राभिमानित्वमवलम्बनीयम् । हे पुत्र, भोक्तुमागच्छेत्युक्ते वचनेनैकेन न भोक्तव्यम् । भोजने च स्तोकं भोक्तव्यं स्तोकं त्यजनीयमिति । एवं करोमीति गतो ऽहं श्वशुरग्रामम् । सन्मानपूर्वकं गृहं प्रविष्टः । अपराह्णवेलायां श्वश्वा भोक्तुमाहूतः । मयोक्तम् । क्षुधा नास्ति । द्वितीये दिने तथा चोक्ते महत्याग्रहे कृते । क्षुधा नास्तीति स्थितः । जामाता न भुङ्क्त इति श्वश्रूः सचिन्ताभूत् । अनु शालितण्डुलान् पिठरकस्थितोदकमध्ये निक्षिप्य मम भार्यायाः तथा प्रतिपादितम् । यदैव तव भर्तुः क्षुधा भवति रात्रौ तदैव रन्धित्वा भोजनं प्रयच्छेरिति । एवं करोमीति तया मे मञ्चकस्याधो निक्षिप्ता पिठरी । रात्रौ क्षुधया मे प्राणेषु गच्छत्सु सत्सु प्रिया प्रस्रवणं कर्तुं बहिर्गता । तदैव मया तण्डुलान् गृहीत्वा मुखं भृतम् । चर्वणे क्रियमाणे आगतया भार्यया भणितं किं कुर्वन् तिष्ठसीति । गदितो ऽपि तदाहं वक्तुं नायातीति तूष्णीं स्थितः । तदनु तया मे मुखं दृष्ट्वोक्तम् । नष्टाहं, भर्तुर्व्याधिरभूत् । मात्रे निरूपितम् । महाकोलाहलो ऽभूत् । तदा लज्जया तण्डुला मया न गिलिताः । प्रातरहं कस्मैचिद् वैद्याय दर्शितः । श्वश्र्वा तस्य दर्शितो ऽहम् । तेन मे ओष्ठयोः पिष्टमवलोक्य तण्डुलचर्वणं जानतापि भणितम् । विषमो व्याधिः । एतत्पुण्यादहमागत इति यथेष्टं द्रव्यं गृहीत्वा मे कपोलौ भेदयित्वा तण्डुलानाकृष्य जनानां प्रदर्शिताः । भणति च । अयं तण्डुलव्याधिः । तदनु अहं गल्लस्फोटको जातः । इति मदीयं मूर्खत्वम् । चतुर्थो बभाण । इदानीं मे मूर्खतामवधारयन्तु ।

एकस्मिन् ग्रामे अहं पामरः सुखेन स्थितः । एकस्यां रात्रौ भार्यया सह जल्पन् स्थितः । तदवसरे ऽन्तश्चौरः प्रविष्टः । स यावदावां निद्रां कुर्वस्तावदसंबलः स्थितः । वचने जातालस्येन

मया भार्यया सह भणितम्। आवयोर्मध्ये यो भणति स पञ्चापूपान् सघृतशर्करान् ददाति इति। प्रतिपन्नमुभाभ्याम्। तदनु चौरो दम्पती दुराग्रहग्रस्ताविति संचिन्त्य वस्त्राभरणादिकमाकृष्य मम भार्याकटिस्थं वासः यावद् गृह्णाति तावत्तयोक्तम्। चौर सर्वं गृहीत्वा यास्यति। किं मौनेन तिष्ठसि। मयोक्तम्। जल्पितं त्वया। पञ्चापूपान् देहीति हस्ते धृता। तदनु स गतः। सर्वैः भणितम्। ग्रहिलो ऽयम्। चौरबन्धुरिति। चतुर्णां मूर्खत्वमवधार्य सर्वैरुक्तम्।

'आहारनिद्राभयमैथुनानि समानमेतत्पशुभिर्नराणाम्।
ज्ञानं नराणामधिको विशेषः ज्ञानेन हीनाः पशुभिः समानाः॥'

इति वचनाद्यूयं पशवः। युष्माकं जयपराजयव्यवस्थाम् इन्द्रो ऽपि कर्तुमसमर्थः। कुतो वयमिति श्रुत्वा द्विजैर्भणितम्। किमीदृग्विधाः सन्त्यत्र। सर्वे विचारका एव। कथयात्मीयं वृत्तान्तम्। स प्राह।

गुर्जरदेशे वंशद्रुहनगरे आविको मोहणः। तदपत्ये आवाम्। एकस्मिन् दिने अजारक्षणे गतौ। अटव्यां पक्वफलसंभृतो वृक्षः कपित्थो दृष्टः। तत्फलास्वादनलम्पटावावां चटितुमसमर्थौ। मयोक्तम्। हे भ्रातः, त्वमजा गृहीत्वा गच्छ। अहं फलानि गृहीत्वागच्छामि। ततो गते तस्मिन् मया स्वशिरश्छेदनं कृत्वा वृक्षस्योपरि निक्षिप्तम्। तत् फलानि भक्षयति। अधः स्थितमुदरं तृप्तिं बिभर्ति। उदरपूर्तौ सत्यां कियन्ति तानि भूमौ निक्षिप्य कबन्धस्योपरि पातितं शिरः लग्नं च। फलानि गृहीत्वा यावद्गच्छामि तावदयमेकस्मिंस्तरुतले सुप्तो दृष्टः। उत्थापितः पृष्टश्च। क्वाजा इति। अहं निद्राभिभूतः सन् सुप्तः ;कथं जानामि। मयोक्तम्। तर्हि फलानि भक्षय। पश्चादवलोकयन्ते। तथा कृते दर्शनाभावाद् गृहं गन्तुं भीतौ श्वेताम्बरवेषान्वितौ देशान्तरं गच्छावः इति पर्यालोच्य भ्रमितुं लग्नाविदानीमत्र समायातौ। तपोहेतुर्भणितः। श्रुत्वा द्विजैरुक्तम्। अहो विचित्रं तपस्विनो वचनमसत्यम्। कृतकतपस्विनोक्तम्। कथमसत्यम्। शिरश्छेदने जीवनम्। तथा शिरसा तेषु भक्षितेषु उदरपूर्तिः पुनस्तत्संधानं च विरुद्धम्। किं भवन्मते एवंविधं नास्ति। अस्ति चेद् ब्रूहि। तत्कथ्यते। कैलासे महेश्वरस्याराधनं तपश्चरणपूर्वकं रावणेन कृतम्। तथापि हर्षं न गच्छति। तदनु नर्तनं कुर्वन् मध्ये मध्ये एकमेकं शिरश्छित्त्वा तत्पादावर्चयति स्म। एवं सर्वेष्वपि तेषु ढौकितेषु तुष्टः शङ्करः याचितं दत्तवान्। रावणः स्वशिरसां संधानं कृत्वा स्वपुरं गत इति। किमेतत्सत्यमसत्यं वा। सत्यम्। एवं तर्हि रामबाणेन मरणं कथं जातम्। तर्हि तस्य दशानां शिरसां संधानमुचितम्। अस्मदीयस्यैकस्येति कथं श्लाघ्यम्। तथा चापरा कथा।

कस्मिश्चिद् ग्रामे कश्चिद् ब्राह्मणः। तत्पुत्रः शिरोमात्रं दधिमुखः। पित्रैकदा द्विजाः आमन्त्रिताः। तैश्च भुक्त्वा गच्छद्भिः दधिमुखस्याशीर्वादो दत्तः। तेनोक्तम्। धन्यो ऽहम्। मम गृहे विप्रैर्भुक्तमिति। तैरुक्तम्। तव गृहं नास्ति। कथं धन्यो ऽसि। तेनोक्तम्। धन्यो ऽहम् पितृगृहं पुत्रस्य किं न भवति। तैरुक्तम्। न। 'गेहिनी गृहमुच्यते' इति वचनात्। तदनु दधिमुखेन पिता भणितः। मम विवाहं कुर्विति। महत्याग्रहे कृते पित्रा विवाहितः। तदनु भोगवान् जातो द्रव्यक्षयं करोतीति पित्रा निर्घाटितः। स चात्मानं शिक्ये निक्षेपयित्वा स्वब्राह्मण्या ग्राहयित्वा देशान्तरं गतः। स चैकदैकं पुरं प्रविश्य द्यूतस्थानं दृष्ट्वा हृष्टः। आत्मानं तत्रैव निधाप्यावलोकयन् स्थितः। सा क्वापि गता। तदवसरे उभयोर्द्यूतकरयोः कलहो जातः। एकेनैकस्य शिरः खड्गेनाहतं पतितम्। तदनु कबन्धे दधिमुखेनात्मीयं शिरः संधितमिति। तथापरापि।

राजगृहे राजा चन्द्ररथः। तस्य द्वे भार्ये। तयोः पुत्राभावादीश्वराराधनं कृतम्। तेन च तुष्टेन तस्मा औषधगुटिका एका दत्ता। या इमां भक्षयति तस्याः पुत्रो भविष्यति इति। तां गृहीत्वागतेन राज्ञा चिन्तितम्। यद्येकस्यै दीयते अपरा दुःखिनी भाविनी इति द्वावंशौ कृत्वा उभाभ्यां दत्तवान्। तयोर्गर्भे स्थिते नवमासावसाने प्रसूतौ सत्याम् उभयोः पुत्रस्यार्धद्वयं जातम्। महेश्वरेण दत्तोऽप्येवंविधः पुत्रः किं क्रियते। अप्रयोजकत्वात् अर्धद्वयं श्मशाने निक्षिप्तम्। तत्र गोमयं गृह्णन्त्या जरासंज्ञया वनितया मेलापितम्। ततो जरासन्धनामासुरो जात इति।

तथान्यापि—ईश्वरस्य गौर्या सह दिव्यवर्षसहस्रानवरतं क्रीडाकरणे देवा यद्येवंविधायां क्रीडायां पुत्रो भविष्यति, स महानसुरो भविष्यतीति सचिन्ता बभूवुः। इति सर्वैः पर्यालोच्य गौरीभ्रातान्निः प्राथितः। त्वं महेश्वरसुरतगृहं गच्छ, येन सा लज्जयोत्थाय गच्छतीति प्रार्थनावशात् स गतः। सा तं दृष्ट्वोत्थिता। तदनु कुपितो हरः भणति। हे निकृष्टवीर्य, क्षरणावसरे किमित्यागतोऽसि। इदानीं किं भूमौ पातो विधीयते। स्वमुखं प्रसारय। नो चेत् त्वं जानासीति तर्जिते प्रसारितं तेन। तत्र तत्पातयति स्म। तदुक्तम्।

> रेतसा यदि रुद्रेण तर्पितो हव्यवाहकः।
> मानवैस्तन्न कर्तव्यं न देवचरितं चरेत्॥ इति।

तत्सामर्थ्यमसहमानः कुष्ठी जातो ऽनलः। एकस्मिन् ग्रामे गङ्गादयः षड् ब्राह्मणपुत्र्यो ऽग्नेरुपासनं कुर्वन्त्यः स्थिताः। तासामङ्गं दृष्ट्वा तत्र क्षिप्तम्। षण्णां षडंशा उत्पन्नाः। तत उद्याने निक्षिप्ताः केनचिन्मेलापिताः। ततः षण्मुखः संजात इति। एताः सर्वाः कथाः सन्ति नो वा। सत्यं सन्ति। तर्हि शिरस्सु छिन्नेष्वपि रावणस्य जीवनम्। भिन्नपुरुषकबन्धे दधिमुखशिरस्संधानम्। अन्यमतेऽन्यस्य [illegible] संधानं चोचितं न मम जीवनं संधानं चेति कथमुचितम्॥

भवत्वेतत्सर्वम्। कथं दूरस्थेन शिरसा भक्षितेषु फलेषु उदरं तृप्यति। किं भवदागमे नास्ति। नास्ति। त्वया ज्ञायते चेत् कथय। कथयामि।

> मत्स्यः प्रीणाति द्वौ मासौ त्रीन् मासान् हरिणो मृगः।
> शकुनिश्चतुरो मासान् पञ्च मासांश्च रुरवः॥
> शशः प्रीणाति षण्मासानश्वः सप्त तु एव च।
> अष्ट मासान् वराहेण मेषो मासान्नवैव च॥
> महिषो दश मासांश्च पशुरेकादशः स्मृतः।
> संवत्सरं तु गर्भिण्यां पशूनां पायसेन वा॥

इति वचनात्। इह मत्स्यादिमांसे ब्राह्मणेभ्यो दत्ते सति स्वर्गस्थाः पितरः कथं तृप्यन्ति। तैरवादि। ब्राह्मणानां [illegible]लमाहात्म्यात्। तेनोक्तम्। कोऽयं ब्राह्मणो नाम। किं शरीरम्। किं जातिः। किं जीवः। किं कुलम्। किं योनिः। किं ज्ञानम्। किं शौचाचारः। किं तपः। किं संस्कारः। इति गत्यन्तराभावात्। न तावत् शरीरम्। क्षत्रियादीनां साधारणत्वात्। किं च मृतस्य ब्राह्मणस्य शरीरदहने बन्धूनां ब्रह्महत्यादिरपि स्यात्। तथा जातिरपि ब्राह्मणो न भवति। तस्या अपि साधारणत्वात्। सा साधारणेति कथं ज्ञायते। यथा गोमहिष्यादीनां परस्परं गमने ऽपत्यादर्शनात्तद्भेदो ज्ञायते। न तथा चाण्डालब्राह्मणादीनां भेदः। परस्परं गमने गर्भदर्शनात्।

किं च यदि जातिः ब्राह्मणः सा च नित्या ब्राह्मणैरभ्युपगता। न च ब्राह्मणस्य ब्राह्मणत्वं नित्यम्। उक्तं च मानवे धर्मशास्त्रे।

सद्यः पतति मांसेन लाक्षया लवणेन च।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयी॥
इतरेषां तु पुण्यानां विक्रयादिविकल्पनात्।
ब्राह्मणस्त्वेकरात्रेण वैश्यभावं तु गच्छति॥
वृषलीफेनपीतस्य निःश्वासोपहतस्य च।
तत्रैव प्रसुप्तस्य निष्कृतिर्नोपलभ्यते॥
ऋतुकालमतिक्रम्य यो ऽभिगच्छति मैथुनम्।
स भवेद् ब्रह्महा नाम हतस्तेन निजात्मकम्॥
ऋतुकाले व्यतिक्रान्ते यस्तु सेवेत मैथुनम्।
ब्रह्महत्याफलं तस्य सूतकं च दिने दिने॥

इति वचनात् ज्ञायते जातिः ब्राह्मणो न भवतीति। जीवो ऽपि ब्राह्मणो न भवति। स्मृतिवचनप्रामाण्यात्। किं तद्वचनम्।

अधीत्य चतुरो वेदान् साङ्गोपाङ्गान् सलक्षणान्।
शूद्रात् प्रतिग्रहं कृत्वा खरो भवति ब्राह्मणः॥
खरो द्वादश जन्मानि षष्टिजन्मानि सूकरः।
श्वानः सप्ततिजन्मानि इत्येवं मनुरब्रवीत्॥

इति वचनात् जीवो ऽपि न ब्राह्मणः। कुलमपि ब्राह्मणो न भवति। मुनीनां कुलस्य दोषप्रसंगात्। तद्यथा।

हस्तिन्यामचलो जातः उलूक्यां केशकम्बलः।
अगस्त्यो ऽगस्त्यपुष्पाच्च कौशिकः कुशसंस्तरात्॥
कठिनात् कठिनो जातः शरगुल्माच्च गौतमः।
द्रोणाचार्यस्तु कलशात् तित्तिरस्तित्तिरीसुतः॥
रेणुकाजनयद्रामं ऋष्यश्रृङ्गं वने मृगी।
कैवर्तो जनयेद् व्यासं कपिलं चैव शूद्रिका॥
विश्वामित्रं च चाण्डाली वसिष्ठं चैव उर्वशी। श्वपाकी पारासरम्।
न तेषां ब्राह्मणी माता ते ऽपि लोकस्य ब्राह्मणाः॥

इति वचनात् न कुलं ब्राह्मणः। ब्राह्मणानां प्रादुर्भाविका योनिरपि न ब्राह्मणः। तत्कथम्—

जन्मना जायते शूद्रः क्रियया द्विज उच्यते।
श्रुतेन श्रोत्रियो ज्ञेयो ब्रह्मचर्येण ब्राह्मणः॥

तथा उक्तं च वेदे।

मुखतो ब्राह्मणा जाता बाहुभ्यां क्षत्रियास्तथा।
ऊरुभ्यां वैश्यजातिश्च पादाभ्यां शूद्रजातयः॥

एवं भगिनीसंसर्गो ऽपि भवेत् ब्राह्मणानामेकपुरुषसंभवत्वात् ब्राह्मण्या इति। ततो ऽपि ज्ञायते योनिरपि न ब्राह्मण इति। अन्यच्च। शूद्रा एव नमस्करणीया न च ब्राह्मणाः। कुतः। पादयोर्न क्षरणात्। ज्ञानम् अपि न ब्राह्मणः। तस्य क्षत्रियादिष्वपि दर्शनात्। शौचाचारो ऽपि न ब्राह्मणः। स्मृतेः प्रामाण्यात्।

आरम्भे वर्तमानस्य ब्राह्मणस्य युधिष्ठिरः।
हिंसकस्य कुतः शौचं मैथुनाभिरतस्य च॥

इति वचनात् ज्ञायते शौचाचारो ऽपि न ब्राह्मण इति। किं च तस्य साधारणत्वात् सर्वे ऽपि ब्राह्मणाः स्युः। तपो ब्राह्मणश्चेत् सिद्धसाधनम्। कुतः तपोमूलत्वादिष्टार्थसिद्धेः। संस्कारो ऽपि न ब्राह्मणः। गर्भाधानं मासे भवति। पुंसवनं चतुर्मासेषु, उत्पन्ने नवमे मासे जातकर्मादि प्रसिद्धम्। उत्तानं दशमे दिने नामकरणं प्रसिद्धम्। परिनिष्क्रमणं गृहाद्बहिर्निष्कासनम्। आयुष्म वयः (?) मासे अन्नप्राशनं प्रसिद्धम्। चौलोपः मुण्डनम्। उपनयनं विदितम्। समावर्तनम् अध्ययनादि शिक्षा। पाणिग्रहणं प्रतीतम्। यज्ञो विदित एव। दहनं मृते सति शरीरप्रज्वलनम्। एतेषां षोडशसंस्काराणां साधारणत्वा[त्]। तथा चोक्तम्।

न शौचादिशरीरेण जातिजीवकुलेन च।
तपसा ज्ञानयोन्या च संस्कारैर्न द्विजो भवेत्॥

तस्मात्—

ब्राह्मणो ब्रह्मचर्येण यथा शल्येन शाल्यिकः।
अन्यथा नाममात्रं स्यात् इन्द्रगोपककीटवत्॥ इति।

ब्राह्मणजातेरभावात् कथं तन्मुखेन पितरस्तृप्यन्ति। अनेकात्मकत्वात्। व्यवधानाच्च। इति शतधा जित्वा प्रतिमाभासुरः स प्रविकसितमुखकमलः मनोवेगः तिष्ठन् ब्राह्मणानां पुरतः पवनवेगेन भणितः। हे मित्र, तव प्रसादेन संसारसमुद्रस्तीर्णः। स मम त्वमेव परमबन्धुः। इदानीं जैनव्रतानि प्रयच्छ। तेनोक्तम्। अहमसमर्थः। मदीयो गुरुस्तिष्ठति उज्जयिन्याम्। तत्र गच्छाव इति कटककटिसूत्रकुण्डलाद्यलङ्कृतौ निजवेषेण स्थितौ खगौ द्विजादिभिर्भणितौ। कौ युवामिति। ताभ्यां स्वस्वरूपं प्रतिपादितम्। तदनु तत्रत्यैर्द्विजादिभिः सार्धं समवसृतिं गतौ। जिनं दृष्ट्वा स्तुत्वोपविष्टौ। तदनु द्विजादिभिः कैश्चित्तपश्चरणं कैश्चिद् व्रतानि गृहीतानि। तदनु पवनवेगेन अष्टाङ्गविशिष्टसम्यक्त्वस्य पञ्चाणुव्रतानां त्रयाणां गुणव्रतानां चतुर्णां शिक्षाव्रतानां एकादश-श्रावकनिलयानां चतुर्णां ब्रह्मचर्याद्याश्रमाणां निःशङ्काद्यष्टकथानां पञ्च व्रतकथानां चतुर्विध-श्रावकधर्मस्य तत्कथानां च स्वरूपं ज्ञात्वा नक्तभोजनविरामस्वरूपं तत्फलेनात्रैव केनचित् फलं च प्राप्तमिति पृष्टो मुनिः प्राह।

अत्रैव भारते मेवाडदेशे मध्यचित्रकूटपुराधीशो नरेश्वरः। तन्मन्त्री श्रीपालः अधिगत-सम्यग्दृष्टिः। तदङ्गना धनवती। सापि तथा। एवं सुखेन तिष्ठतोस्तयोरेकस्मिन् दिने ऽस्तमन-वेलायां तद्गृहजागरिकचाण्डालपत्नी ग्रासार्थमागता। तस्मिन्नेवावसरे श्रेष्ठिपुत्रेणागत्य माता भोजनं याचिता। तयोक्तम्। पुत्र रात्रौ नोचितम्। सहताग्रहेण याचिते ऽपि न दत्तम्। तदनु चाण्डालवनितया पृष्टा। स्वामिनि, किमित्यस्य भोजनं न दत्तम्। तयोक्तम्। अनेन संसारे

परिभ्रमता महता कष्टेन मनुष्यत्वं प्राप्त जैनधर्मश्च। रात्रौ द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियमिश्रितान्न-पानखाद्यलेह्यलक्षणं चतुर्विधाहारं भुक्त्वा नरकं गच्छेत् पुनः दुष्प्राप्यम्। कथमपि लब्धमपि रूपादिहीनं स्यात्। तदुक्तम्—

विरूपो विकलाङ्गः स्यात् अल्पायू रोगपीडितः।
दुर्भगो दुष्कुलश्चैव नक्तभोजी सदा नरः॥

इति श्रुत्वा तयानस्तमितफलं दृष्टम्। सा प्राह। यो ऽनस्तमितं पालयति देवलोके सुरवरो भूत्वा तस्मादागत्यात्रेक्ष्वाक्वादिक्षत्रियवंशेषु वैश्यवंशेषु च उत्पद्य दिव्यभोगानुभवनं कृत्वा पश्चात्तपोनुष्ठानेन सर्वज्ञपदवीपूर्वकं सिद्धपदवीं गच्छति। तथा चोक्तम्—

निजकुलैकमण्डनं त्रिजगदीशसंपदम्।
भजति यः स्वभावतः त्यजति नक्तभोजनम्॥

इति श्रुत्वा चाण्डाल्यानस्तमितं गृहीतम्। तदनु गृहं गता। रात्रौ चाण्डालेन सहभोक्तुमाहूता। तयोक्तम्। मया रात्रावभुक्तिव्रतं गृहीतमिति न भुज्यते। तेन पुनराहूता। यदा कथमपि न भुङ्क्ते तदा छुरिकयात्मानं विदार्य मारिता सा। निदानेन धनवत्या गर्भमाश्रिता। नवमासावसाने नागश्रीर्नाम पुत्री बभूव। सो ऽपि छुरिकया आत्मानं विदार्य मृतः। तत्रैव श्वाजनि। तत्रापरः श्रीधरनामा वणिगाहारदाने रतः। स एकदा स्वभार्यां श्रियं त्वं दानं कुर्विति नियोज्य परतीरं गतः। अतस्तयाहारदानं निवार्य संचयः कृतः। गतेन श्रीधरेण सर्वं ज्ञात्वा कूटलेखक्रिया कृता। पुरुषस्यैकस्य हस्ते तत्पत्रं दत्तम्। यदाहं श्रीश्चैकत्र तिष्ठावः तदा तव श्वशुरेण प्रस्थापितो ऽयं लेख इति भण त्वमिति। तथैव तेन दत्तो लेखो वाचितः श्रीधरेण। तव श्वशुरस्य महानिष्टं वर्तते। त्वया शीघ्रमागन्तव्यम्। नो चेन्न पश्यसि। तत् श्रुत्वा श्रीः दुःखिता बभूव। भणितं च तया। हे नाथ, त्वं क्रियाणकं सर्वं गृहे सुविधानेन निधाय पश्चादागच्छ। अहं तावद्गच्छामि। गच्छेति प्रेषिता। गतायां तस्यां श्रीधरेण नागश्रीः परिणीता। श्रीर्गत्वा पितरं दृष्ट्वा आत्मीयं दुष्कृतं ज्ञात्वा स्थिता। कियत्सु दिवसेष्वागता। भर्तुः पादयोः पतिता। तेन च विभिन्नगृहे स्थापिता। कियत्सु वर्षेषु पुनः श्रेष्ठी जलयात्रां गतः। इतो नागश्रीः सातिशयं दानं ददाति। एकदा श्रिया भणिता। हे भगिनि स्थितेषु मुनिषु मामाह्वय। येनाहं पादस्थानिकादिकं स्फोटयित्वा पुण्यमुपार्जयामि। एवं भवत्विति। सा दिनं प्रत्याह्वयति। एकस्मिन् दिने नागश्रिया श्रियमाहूता। को ऽपि नास्तीत्युक्तं श्रुत्वाह्वातुं गतः। तया तं दृष्ट्वा तस्योपरि कोपादतिशयेनोष्णं तैलं निक्षिप्तम्। शरणेनागत्य नागश्रीगृहद्वारे पतितः। तया तस्य पञ्च नमस्कारा दत्ताः आहारदानं च। तत्फलेन स व्यन्तरदेवो जातः। इतः श्रेष्ठिना बहुद्रव्येण गच्छता दुर्वातेन जलयानपात्रे आवर्ते निक्षिप्तम्। तेन देवेनासनकम्पात् ज्ञात्वागत्य जलयानपात्रं सुपथे निक्षिप्य प्रणम्योक्तम्। हे वणिगीश, तव गृहे यः कृष्णः श्वा स्थितः सोऽहम्। एवं विधानुष्ठाने जाते नागश्रिया दत्तपञ्चनमस्कारदानफलेनाहं देवो जातः। तस्यात्मस्वरूपं प्रतिपाद्य दिव्यवस्त्राभरणादिभिः पूजयित्वा तदनु दिव्याहारं दत्त्वा भणति स्म। इमं नागश्रियै प्रयच्छेति। तदनु स्वलोकं गतः।

अतिसन्तुष्टः श्रेष्ठी सुखेनागतः। महोत्साहेन राजानं दृष्टवान्। अनु सुखेन स्थितः। केनचिद्दुष्टेन श्रेष्ठिन्याः स्वकण्ठे निक्षिप्तं हारं दृष्ट्वा राज्ञः कथितम्। तया च राज्ञे भाषितम्। तेन च याचितः। श्रेष्ठिना दत्तः। राज्ञा च राज्यै दत्तः। तया स्वकण्ठे निक्षिप्तः। तदनु सर्पो जातः। भीतया तया हा नष्टाहमित्युक्तः। तदनु राज्ञा श्रीधरो वृत्तान्तं पृष्टः। श्रुत्वा राज्ञोक्तम्।

ध्वा किल देवो ऽभूदित्यसत्यमेतत् । अयं निगृह्यतामिति । तस्य निग्रहकरणे आसनकम्पेन ज्ञात्वा-गत्य तेन देवेन राज्ञस्ताडनादिरुपसर्गः कृतः । तदनु राज्ञा पादयोः पतित्वा रक्ष रक्षेत्युक्ते ऽहमसमर्थः श्रेष्ठी समर्थ इति भणितेन राजा श्रेष्ठिसमीपमागत्य क्षन्तव्यमित्युक्तवान् । श्रेष्ठिना देवो निवारितः । स चात्मस्वरूपं प्रतिपाद्य स्वावासं गतः । राजादयस्तमतिशयं दृष्ट्वा धर्मनिरता बभूवुः । श्रेष्ठी च भ्रियान्नदानं निवार्य संचितद्रव्येण कुक्कुरवसतिं कृत्वा सुखेन स्थितः । इत्यनस्त-मितधर्मकथां श्रुत्वा पवनवेगो हृष्टः । सकलश्रावकव्रतानि गृहीतवान् । तदनु तौ वसुपूज्यकेवलिनं स्तुत्वा स्वावासं गतौ । सुखेन स्थितौ ।

इति श्रीरामचन्द्रेण मुनिना गुणशालिना ।
ख्याता धर्मपरीक्षा सा कृताकृतरियं ततः ॥
श्रीपूज्यपादसद्वंशे जातो ऽसौ मुनिपुङ्गवः ।
पद्मनन्दी इति ख्यातो भव्यव्यूहप्रवन्दितः ॥
तच्छिष्यो देवचन्द्राख्यो भद्रश्चारुगुणान्वितः ।
वेदिता सर्वशास्त्राणां ख्यातो धर्मरताशयः ॥
स च ͜ द्व्रतोपेतः समयादिविवर्जितः ।
समयः सर्वसत्त्वानां तत्प्रार्थनवशाद् वरः ॥
यावद् व्योम्नि प्रवर्तन्ते शशाङ्करवितारकाः ।
तावद् धर्मपरीक्षेयं वर्तिषीष्ट सदाशये ॥
पद्मनिवासभूता हि कथा पद्मायनीं वराम् ।
तथा धर्मपरीक्षां च मिथ्यात्वाज्ञानध्वंसिनीम् ॥

इति धर्मपरीक्षाकथा समाप्ताः ॥छ॥ शुभं भवतु लेखकपाठकयोः ।
ग्रं २०० । श्रीसरस्वत्यै नमः ।

श्रीदेशीयगणाग्रगण्यसकलसंयमगुणाम्भोधि-श्रीपार्श्वकीर्तिमुनिराजस्य धर्मपरीक्षा ग्रन्थस्य शुभमस्तु । कल्याणमस्तु ।



# श्लोकानुक्रमणिका

## ई



## उ



## ऊ



## ऋ



## ए

### ध



### न

## प

र



ल

ह

# धर्मपरीक्षा–संस्कृतेतरशब्दसूची

| | | | | | |
|---|---|---|---|---|---|
| भाक्तिक | १।४ | कल्पयामि | ४।९१ | भिण्ड | १२।८३ |
| जागरूक | १।९ | चतुष्किका | ५।१२ | ग्रहिल | १३।२३ |
| उष्णते | १।११ | विलया | ५।१८ | विगोपक | १३।३४ |
| पञ्चाशतं | १।२४ | जेमामि | ५।३९ | °समुद्रयातिभिः | १३।९८ |
| बुधनीयशीलं | १।३८ | वल्भ् | ५।४२ | उदरं कृतम् | १४।१७ |
| संमुखम् | २।६ | निर्घाट्यितां | ५।७१ | विलोभत्वं | १५।२२ |
| विघ्यातः | २।२६ | विध्यापयते | ६।१४ | कचार | १५।२३ |
| जयान or जम्पान | २।३३ | जेमति | ७।५ | जरासिन्धु | १५।५४ |
| वाचं यच्छन्ति | २।६२ | पौलस्त्य | ७।२७ | वर्करं | १५।७२ |
| उद्वेष्टित | २।६६ | दीनार | ७।३९ | पीलन | १६।१० |
| विध्यापयति | २।७९ | सुखासिका | ७।६८ | नवाः | १६।५५ |
| कंकटूक | २।८९ | परिवर्त | ७।६९ | डिक्करी | १६।६६ |
| अब्दक | ३।८१ | राटिम् | ७।९५ | पेलितः | १६।६९ |
| वातकी | ३।८९ | कंसकारा | ८।२२ | सिक्थक | १६।७० |
| पिशाचकी | ३।८९ | बोडा | ८।२८ | टिण्टा | १६।७१ |
| मनःक्षितिः | ३।९५ | महाराटी | ८।३२ | टिण्टाकीलिके | १६।७३ |
| उत्तरामि | ३।९५ | बोद | ८।५५ | ठक्क | १७।५ |
| उत्तीर्ण | ४।१ | मारी | ८।६२ | पार्पद्धिक | १७।१९ |
| मरीचात्यन्त° | ४।१६ | कर्णसूचिका | ८।७५ | खटिक | १७।२० |
| करण | ४।१२ | सावर ( शाबरः ) | ८।७७ | यक | १७.४७ |
| वर्तुल | ४।२० | खटिका | ११।७२ | महत्तर | १७।९० |
| ग्रामकूट | ४।४७ | बालेयक | १२।४६ | शम्पा | १८।२८ |
| किंचन न मुमोच | ४।८१ | बन्धितः | १२।६४ | पटलिका | १८।४३ |
| महेला | ४।८९ | सामज | १२।८२ | प्राघुकं | १८।५० |

# धर्मपरीक्षा-सुभाषितानि

| प. क्र. | श्लोक क्रमांक |
|---|---|
| १. | ८, ११, १३, १४, १५, १६, ५२, ५४। |
| २. | २६, २७, २८, २९, ६३, ६६, ८१, ८३, ८६, ८९, ९३, ९४। |
| ३. | ७, ३७, ३८, ३९, ४०, ४१, ४३, ५०, ५४, ५९, ६४, ८१, ८८, ९१, ९४। |
| ४. | १२, १८, २२, २३, २५, २७, २८, २९, ३०, ३१, ३५, ३६, ४२, ४३, ४९, ५१, ५५, ५७, ५८, ६२, ७३, ७५, ७६, ७७, ८५, ८६, ८९, ९३, ९४, ९५। |
| ५. | ५, ७, ८, ११, १६, १७, ३३, ४७, ५९, ७२, ७८, ८०, ८१, ८६, ९६। |
| ६. | १२, १३, १५, २२, २५, २८, ३३, ४४, ४५, ५१, ६७, ८५, ९१। |
| ७. | १०, १३, १८, २२, १४, ४६, ५६, ५९, ६०, ८२, ८३, ८४, ८६, ८७। |
| ८. | १६, १७, १९, २१, २३, ३१, ४०, ६४, ६८, ७०, ८९, ९१, ९३। |
| ९. | ५, ६, ९, १७, ४०, ४१, ४७, ४९, ५१, ५५, ५७, ६५, ६७, ७०, ८५, ८८, ९२, ९५। |
| १०. | ८, ९, ३१, ३३, ३४, ३५, ३६, ३८, ४३, ८०, ८८, ८९, ९७। |
| ११. | १३, २१, २५, २८, ३२, ३३, ४२, ४४, ४७, ४९, ५०, ५१, ५५, ५६, ५८, ६२, ६८, ६९, ७२, ८१, ८६, ८९, ९०, ९५। |
| १२. | ५, ६, ७, ८, ९, १२, १५, ३७, ३९, ४८, ७३, ८६, ९७। |
| १३. | ३०, ३२, ३५, ३६, ३८, ५७, ५८, ६१। |
| १४. | ६, २३, ३४, ७२, ८३, ८४, ८५, ९५, १००, १०१ |
| १५. | ४, ६, २१, २२, २४, ३१, ३२, ३३, ३५, ३६, ४४, ४६, ४७, ४९, ५७, ८६। |
| १६. | ३, ७, १०, १४, १६, ४९, ५८, ६४, १०२। |
| १७. | १८, २६, २८, २९, ५४, ५५, ५६, ६०। |
| १८. | ४५, ४६, ४७, ६०, ६९, ८२, ८३, ९७, ९८। |
| १९. | ९, ६९। |
| २०. | १८, २३, ८७। |

□